प्रतिकर्तुमशक्तस्य क्षमा का हि बलीयसि ।
विनयाचारधीरेषु क्षन्तव्यं किं च साधुषु ॥ ११ ॥
शक्त एव तितिक्षते दुर्बलस्खलितं यत ।
वरं परिभवस्तस्मान्न गुणाना पराभव ॥ १२ ॥
असत्क्रिया हीनबलाच्च नाम निर्देशकाल परमो गुणानाम् ।
गुणप्रियस्तत्र किमित्यपेक्ष्य स्वधैर्यभेदाय पराक्रमेत ॥ १३ ॥
नित्यं क्षमायाश्च ननु क्षमाया काल परायत्ततया दुराप ।
परेण तस्मिन्नुपपादिते च तत्रैव कोपप्रणयक्रम क. ॥ १४ ॥
स्वा धर्मपीडामविचिन्त्य योऽयं मत्पापशुद्ध्यर्थमिव प्रवृत्त ।
न चेत्क्षमामप्यहमत्र कुर्यामन्य कृतघ्नो बत कीदृश स्यात् ॥ १५ ॥

यक्ष उवाच—तेन हि न त्वमस्या कदाचित्प्रबाधनाया मोक्ष्यसे—

गुणेष्वबहुमानस्य दुर्जनस्याविनीतताम् ।
क्षमानैभृत्यमत्यक्त्वा क सकोचयितुं प्रभु ॥ १६ ॥

बोधिसत्त्व उवाच—

परस्य पीडाप्रणयेन यत्सुखं निवारणं स्यादसुखोदयस्य वा ।
सुखार्थिनस्तन्न निषेवितुं क्षम न तद्विपाको हि सुखप्रसिद्धये ॥ १७ ॥
क्षमाश्रयादेवमसो मयार्थत. प्रबोध्यमानो यदि नावगच्छति ।
निवारयिष्यन्ति त एनमुत्पथादमर्षिणो यानयमभ्युपैष्यति ॥ १८ ॥
असत्क्रिया प्राप्य च तद्विधाज्जनान्न मादृशेऽप्येवमसौ करिष्यति ।
न लब्धदोषो हि पुनस्तथाचरेदतश्च मुक्तिर्मम सा भविष्यति ॥ १९ ॥

अथ यक्षस्त महासत्त्व प्रमादविस्मयबहुमानावर्जितमति साधु साध्विति सशिर प्रकम्पाङ्गुलिविक्षेपमभिसराध्य तत्तत्प्रियमुवाच –

कुतस्तिरश्चामियमीदृशी स्थितिर्गुणेष्वमौ चादरविस्तर कुत ।
कयापि बुद्ध्या त्विदमास्थितो वपुस्तपोवने कोऽपि भवास्तपस्यति ॥ २० ॥

इत्येनमभिप्रशस्य त चास्य दुष्टवानर पृष्ठादवधूय समादिश्य चास्य रक्षाविधानं तत्रैवान्तर्दधे ।

तदेवं सति क्षन्तव्ये क्षमा स्यान्नासतीत्यपकारिणमपि साधवो लाभमिव बहु मन्यन्ते इति क्षान्तिकथाया वाच्यम् । एवं तिर्यग्गताना बोधिसत्त्वाना प्रतिसख्यानसौष्ठव दृष्टम् । को नाम मनुष्यभूत प्रव्रजितप्रतिज्ञो वा तद्विकल शोभेत ? इत्येवमपि वाच्यम् । तथागतवर्णे सत्कृत्य धर्मश्रवणे चेति ।

॥ इति महिषजातक त्रयस्त्रिंशत्तमम् ॥

---

## ३४ शतपत्र-जातकम्

प्रोत्साह्यमानोऽपि साधुर्नाल पापे प्रवर्तितुमनभ्यासात् । तद्यथानुश्रूयते—

बोधिसत्त्व किलान्यतमस्मिन् वनप्रदेशे नानाविधरागरुचिराचत्रपत्र शतपत्रो बभूव । करुणापरिचयाच्च तदवस्थोऽपि न प्राणिहिंसाकलुषा शतपत्रवृत्तिमनुववर्त ।

बालै प्रवालै स महीरुहाणा पुष्पाधिवासैर्मधुभिश्च हृद्यै ।
फलैश्च नानारसगन्धवर्णै सतोषवृत्ति बिभराचकार ॥ १ ॥
धर्मं परेभ्य प्रवदन् यथार्हमार्तान् यथाशक्ति समुद्धरंश्च ।
निवारयंश्चाविनयादनार्यानुद्भावयामास परार्थचर्याम् ॥ २ ॥

इति परिपाल्यमानस्तेन महासत्त्वेन तस्मिन् वनप्रदेशे सत्त्वकाय साचार्यक इव बन्धुमानिव सवैद्य इव राजन्वानिव सुखमभ्यवर्धत ।

दयामहत्त्वात्परिपाल्यमानो वृद्धि यथासौ गुणतो जगाम ।
स सत्त्वकायोऽपि तथैव तेन सरक्ष्यमाणो गुणवृद्धिमाप ॥ ३ ॥

अथ कदाचित्स महासत्त्व सत्त्वानुकम्पया वनान्तराणि समनुविचरंस्तीव्रवेदनाभिभवाद्विचेष्टमानं दिग्धविद्धमिवान्यतमस्मिन् वनप्रदेशे रेणुसंपर्कव्याकुलमलिनकेसरसटं सिंहं ददर्श। समभिगम्य चैन करुणया परिचोद्यमान पप्रच्छ - किमिदं मृगराज ? बाढ खल्वकल्यशरीरं त्वा पश्यामि ।

द्विपेषु दर्पातिरसानुवृत्त्या जवप्रसङ्गादथवा मृगेषु ।
कृत तवास्वास्थ्यमिदं श्रमेण व्याधेर्नुणा वा रुजया कयाचित् ॥ ४ ॥
तद् ब्रूहि वाच्यं मयि चेदिदं ते यदेव वा कृत्यमिहोच्यता तत् ।
ममास्ति या मित्रगता च शक्तिस्तत्साध्यसौख्यस्य भवान् सुखी च ॥ ५ ॥

सिह उवाच – साधो पक्षिवर ! न मे श्रमजातमिदमस्वास्थ्यं रुजया व्याधेर्नुणा वा । इद त्वस्थिशकल गलान्तरे विलग्न शल्यमिव मा भृशं दुनोति । न ह्येनच्छक्नोम्यभ्यवहर्तुमुद्गरितुं वा । तदेष काल सुहृदाम् । यथेदानी जानासि, तथा मा सुखिनं कुरुष्वेति ।

अथ बोधिसत्त्व पटुविज्ञानत्वाद्विचिन्त्य शल्योद्धरणोपायं तद्वदनविष्कम्भप्रमाणं काष्ठमादाय त सिंहमुवाच–या ते शक्तिस्तया सम्यक् तावत्स्वमुख निर्व्यादेहीति । स तथा चकार । अथ बोधिसत्त्वस्तदस्य काष्ठ दन्तपाल्योरन्तरे सम्यग्निवेश्य प्रविश्य चास्य गलमूलं तत्तिर्यगवस्थितमस्थिशकलं वदनाग्रेणाभिहत्यैकस्मिन् प्रदेशे समुत्पादितशैथिल्यमितरस्मिन् परिगृह्य पर्यन्ते विचकर्ष । निर्गच्छन्नेव तत्तस्य वदनविष्कम्भणकाष्ठ निपातयामास ।

सुदृष्टकर्मा निपुणोऽपि शल्यहृन्न तत्प्रयत्नादपि शल्यमुद्धरेत् ।
यदुज्जहारानभियोगसिद्धया स मेधया जन्मशतानुबद्धया ॥ ६ ॥
उद्धृत्य शल्येन सहैव तस्य दु ख च तत्सजनिता शुचं च ।
प्रीत· स शल्योद्धरणाद्यथासीत् प्रीत सशल्योद्धरणात्तथासीत् ॥ ७ ॥

धर्मता ह्येषा सज्जनस्य ।

प्रसाध्य सौख्यं व्यसनं निवर्त्य वा सहापि दु खेन परस्य सज्जन ।
उपैति ता प्रीतिविशेषसपद न या स्वसौख्येषु सुखागतेष्वपि ॥ ८ ॥

इति स महासत्त्वस्तस्य तद्दु खमुपशमय्य प्रीतहृदयस्तमामन्त्र्य सिंहं प्रतिनन्दितस्तेन यथेष्टं जगाम ।

अथ स कदाचित्प्रविततरुचिरचित्रपत्र शतपत्र. परिभ्रमन् किंचित्क्वचित्

तद्विधमाहारजातमनासाद्य क्षुदग्निपरिगततनुस्तमेव सिंहमचिरहतस्य हरिणतरुणस्य मासमुपभुञ्जान तद्रुधिरानुरञ्जितवदननखरकेसराग्रं संध्याप्रभासमालब्ध शरन्मेघविच्छेदमिव ददर्श।

कृतोपकारोऽपि तु न प्रसेहे वक्तु स याच्ञाविरसाक्षर तम्।
विशारदस्यापि हि तस्य लज्जा तत्कालमौनव्रतमादिदेश॥ ९॥
कार्यानुरोधात्तु तथापि तस्य चक्षुष्पथे ह्रीविधुर चचार।
स चानुपश्यन्नपि तं दुरात्मा निमन्त्रणामप्यकरोन्न तस्य॥ १०॥
शिलातले बीजमिव प्रकीर्णं हुतं च शान्तोष्मणि भस्मपुञ्जे।
समप्रकारं फलयोगकाले कृत कृतघ्ने विदुले च पुष्पम्॥ ११॥

अथ बोधिसत्त्वो नूनमयं मा न प्रत्यभिजानीत इति निर्विशङ्कतर समभिगम्यैनमर्थिवृत्त्या प्रयुक्तयुक्ताशीर्वाद सविभागमयाचत—

पथ्यमस्तु मृगेन्द्राय विक्रमार्जितवृत्तये।
अर्थिसमानमिच्छामि त्वद्यश पुण्यसाधनम्॥ १२॥

इत्याशीर्वादमधुरमप्युच्यमानोऽथ सिंह क्रौर्यमात्सर्यपरिचयादनुचितार्यवृत्ति कोपाग्निदीप्तयातिपिङ्गलया दिधक्षन्निव विवर्तितया दृष्ट्या बोधिसत्त्वमीक्षमाण उवाच—मा तावद्भो।

दयाक्लैब्यं न यो वेद खादन् विस्फुरतो मृगान्।
प्रविश्य तस्य मे वक्त्र यज्जीवसि न तद्बहु॥ १३॥
मा पुन परिभूयैवमासादयसि याच्ञया।
जीवितेन नु खिन्नोऽसि पर लोकं दिदृक्षसे॥ १४॥

अथ बोधिसत्त्वस्तेन तस्य रूक्षाक्षरक्रमेण प्रत्याख्यानवचसा समुपजातव्रीडस्तत्रैव नभ समुत्पपात। पक्षिणो वयमित्यर्थंत पक्षविस्फारणशब्देनैनमुक्त्वा प्रचक्राम।

अथान्यतमा वनदेवता तस्य तमसत्कारमसहमाना धैर्यप्रयामजिज्ञासया वा समुत्पत्य त महासत्त्वमुवाच—पक्षिवर, कस्मादिममसत्कारमस्य दुरात्मन कृतोपकार सन् संविद्यमानाया शक्तावपि मर्षयसि? कोऽर्थ कृतघ्नेनानेनैवमुपेक्षितेन?

शक्तस्त्वमस्य नयने वदनाभिघाताद्
विस्फूर्जित प्रमथितु बलशालिनोऽपि।
दंष्ट्रान्तरस्थमपि चामिषमस्य हर्तुं
तन्मृष्यते किमयमस्य बलावलेप॥ १५॥

अथ बोधिसत्त्वस्तथाप्यसत्कारविप्रकृत प्रोत्साह्यमानोऽपि तया वनदेवतया स्वा प्रकृतिभद्रता प्रदर्शयन्नुवाच—अलमलमनेन क्रमेण। नैष मार्गोऽस्मद्विधानाम्।

आर्ते प्रवृत्ति साधूना कृपया न तु लिप्सया।
तामवैतु परो मा वा तत्र कोपस्य को विधि॥ १६॥
वञ्चना सा च तस्यैव यन्न वेत्ति कृतं पर।
को हि प्रत्युपकारार्थी तस्य भूय करिष्यति॥ १७॥

उपकर्ता तु धर्मेण परतस्तत्फलेन च ।
योगमायाति नियमादिहापि यशस. श्रिया ॥ १८ ॥
कृतश्चेद्धर्म इत्येव कस्तत्रानुशय पुन ।
अथ प्रत्युपकारार्थमृणदानं न तत्कृतम् ॥ १९ ॥

उपकृतं किल वेत्ति न मे परस्तदपकारमिति प्रकरोति य ।
ननु विशोध्य गुणै स यशस्तनुं द्विरदवृत्तिमभिप्रतिपद्यते ॥ २० ॥
न वेत्ति चेदुपकृतमातुर· परो न योक्ष्यतेऽपि स गुणकान्तया श्रिया ।
सचेतस पुनरथ को भवेत्क्रमः समुच्छ्रित प्रमथितुमात्मनो यशः ॥ २१ ॥

इदं त्वत्र मे युक्तरूपं प्रतिभाति—

यस्मिन् साधूपचीर्णेऽपि मित्रधर्मो न लक्ष्यते ।
अनिष्ठुरमसंरब्धमपयायाच्छनैस्तत. ॥ २२ ॥

अथ सा देवता तत्सुभाषितप्रसादितमना साधु साध्विति पुनरुक्तमभिप्रशस्य तत्तत्प्रियमुवाच—

ऋते जटावल्कलधारणश्रमाद्भवानृषिस्त्वं विदितार्यतिर्यति ।
न वेषमात्रं हि मुनित्वसिद्धये गुणैरुपेतस्त्विह तत्त्वतो मुनिः ॥ २३ ॥

इत्यभिलक्ष्य प्रतिपूज्यैनं तत्रैवान्तर्दधे ।

तदेवं प्रोत्साह्यमानोऽपि साधुर्नालं पापे प्रवर्तितुमनभ्यासादिति सज्जनप्रशंसाया वाच्यम् । एवं क्षान्तिकथायामप्युपनेयम्—एवं क्षमापरिचयान्न वैरबहुलो भवति, नावद्यबहुलौ बहुजनप्रियो मनोज्ञश्चेति । एवं प्रतिसंख्यानबहुला स्वा गुणशोभामनुरक्षन्ति पण्डिता इति प्रतिसंख्यानवर्णे वाच्यम् । तथागतमाहात्म्ये च भद्रप्रकृत्यभ्यासवर्णे च—एवं भद्रप्रकृतिरभ्यस्ता तिर्यग्गतानामपि न निवर्तत इति ।

॥ इति शतपत्र-जातक चतुस्त्रिंशत्तमम् ॥

---

॥ कृतिरियमार्यशूरपादानाम् ॥